त्तिरिति तत्र सौभराणां भेद एव । अतश्च विजातीये सौभरे हीषः पक्षेऽप्यप्राप्तत्वात्तस्य हीषादिनियमविषयत्वायोगेन न तस्य परम्परासम्बन्धघटकत्वम् । ततश्च वृष्टौ हीषेव विजातीय-सौभरद्वारा कुर्यादित्येतद्वाक्यार्थः फलितो भवति । एवञ्च वृष्ट्य-र्थसौभरविधावपि विजातीयानां सौभराणां विकल्पेन वृष्ट्यर्थं प्राप्तानां हीषूनिधनकस्यैव सौभरविशेषस्य वृष्टिसाधनता ना-ऽन्येषामित्यपि नियमः फलितो भवति । न ह्यन्यथा वृष्टौ हीषे-वेति नियमः कथमपि सम्पादयितुं शक्यः, निधनान्तरयुक्तस्या-पि सौभरान्तरस्य तदर्थं क्रियमाणत्वात् । अतो हीषूनियमवि-धेः समानजातीयसौभरस्थले शाखान्तरायोगादिनिधनान्तर-व्यावृत्तिफलकत्वेऽपि हीषभिन्ननिधनयुक्तविजातीयसौभरस्थले तस्य वृष्ट्यर्थताव्यावृत्तिफलकत्वमपि कांस्यभोजिन्यायेन न विरुध्यते ।

अत एव यत्र न कांस्यभोजिन्यायः, यथा कारीर्या-दौ, तत्र न तस्य वृष्ट्यर्थता व्यावर्त्यते, वृष्ट्यर्थसौभरविधेस्तु हीषूनिधनकसौभरमात्रग्रहणेन चारितार्थ्यात् युक्ता विजातीय-सौभरव्यावृत्तिफलकनियमफलकतेति विशेषः । अतः सौभरा-न्तरस्याऽपि नित्यनैमित्तिकप्रयोगविषयत्वमेव, न तु काम्यप्रयोग-विषयत्वमित्यपि द्रष्टव्यम् । अतः सिद्धं हीषादिविधौ विधि-लाघवानुरोधेनैव न गुणफलसम्बन्धः, न वा तदर्थं गुणाम्ना-वनाभेद इति ।

प्रयोजनं—पूर्वपक्षे वृष्ट्यर्थं सर्वसौभरानुष्ठानेऽपि अन्नाद्या-र्थमूर्गादिनिधानानुष्ठानं वृष्ट्यन्तरार्थं वा हीष एवाऽनुष्ठानम्, सिद्धान्ते तु नेत्यादि स्पष्टम् ।

सूत्रं तु—सर्वस्य सौभरस्योक्तकामत्वेन प्रत्यभिज्ञानात्त-

स्मिन् द्वारभूते सत्येव हीषादेः कामश्रुतिस्स्यात्। न चैवं सौभ-
भरे हीषादेः पाठादेव प्राप्तत्वात् विधानानर्थक्यम्, दृष्टिसाधनी-
भूतविजातीयसौभरवृत्तिनिधनव्यवस्थार्थत्वेन पुनःश्रुतिसार्थ-
क्यादित्येव व्याख्येयम्॥

मीमांसाम्बुनिधिं प्रमथ्य सुदृढैर्न्यायोच्चयैर्निर्झरैः
कृत्वा जैमिनिसूत्रमन्दरममुं वेदं तथा वासुकिम्।
यद्धालाहलसंज्ञमेव कलितं ग्रन्थान्तरं सज्जनैः
श्रीकृष्णस्य तु भूषणाय स परं यः कौस्तुभाख्यो मणिः॥

श्रीरुद्रदेवसूनोः कृतिरेषा खण्डदेवस्य।
मीमांसाकौस्तुभाख्या भेदाध्याये द्वितीयोऽङ्घ्रिः॥

इति श्रीमत्पूर्वोत्तरमीमांसापारावारपारीणधुरीणश्रीरुद्रदेवसूनु-
खण्डदेवविरचितमीमांसाकौस्तुभे द्वितीयाध्यायस्य
द्वितीयः पादः॥ २॥

